॥ श्रीहरिहरपुत्राष्टोत्तरशतनामस्तोत्रम् ॥

अस्य श्री हरिहरपुत्राष्टोत्तरशतनामस्तोत्रस्य ।
ब्रह्मा ऋषिः । अनुष्टुप् छन्दः ।
श्री हरिहरपुत्रो देवता । ह्रीं बीजं ।
श्रीं शक्तिः । क्लीं कीलकं ।
श्री हरिहरपुत्र प्रीत्यर्थे जपे विनियोगः ॥

ह्रीं इत्यादिभिः षडङ्गन्यासः ॥

ध्यानम् ॥

त्रिगुणितमणिपद्मं वज्रमाणिक्यदण्डं
सितसुमशरपाशमिक्षुकोदण्डकाण्डं
घृतमधुपात्रं बिभृतं हस्तपद्मैः
हरिहरसुतमीडे चक्रमन्त्रात्ममूर्तिं ॥

ॐ ॥

महाशास्ता विश्वशास्ता लोकशास्तथैव च ।
धर्मशास्ता वेदशास्ता कालशस्ता गजाधिपः ॥ १
गजारूढो गणाध्यक्षो व्याघ्रारूढो महद्युतिः ।
गोप्तागीर्वाण संसेव्यो गतातङ्को गणागृणीः ॥ २
ऋग्वेदरूपो नक्षत्रं चन्द्ररूपो बलाहकः ।
दूर्वाश्यामो महारूपः क्रूरदृष्टिरनामयः ॥ ३
त्रिनेत्र उत्पलकरः कालहन्ता नराधिपः ।
खण्डेन्दु मौळितनयः कल्हारकुसुमप्रियः ॥ ४
मदनो माधवसुतो मन्दारकुसुमर्चितः ।
महाबलो महोत्साहो महापापविनाशनः ॥ ५
महाशूरो महाधीरो महासर्प विभूषणः ।
असिहस्तः शरधरो फालाहलधरात्मजः ॥ ६
अर्जुनेशोऽग्नि नयनश्चानङ्गमदनातुरः ।
दुष्टग्रहाधिपः श्रीदः शिष्टरक्षणदीक्षितः ॥ ७
कस्तूरीतिलको राजशेखरो राजसत्तमः ।
राजराजार्चितो विष्णुपुत्रो वनजनाधिपः ॥ ८
वर्चस्करोवररुचिर्वरदो  वायुवाहनः ।
वज्रकायः खड्गपाणिर्वज्रहस्तो बलोद्धतः ॥ ९
त्रिलोकज्ञश्चातिबलः पुष्कलो वृत्तपावनः ।

पूर्णाधवः पुष्कलेशः पाशहस्तो भयापहः ॥ १०
फट्काररूपः पापघ्नः पाषण्डरुधिराशनः ।
पञ्चपाण्डवसन्त्राता परपञ्चाक्षराश्रितः ॥ ११
पञ्चवक्त्रसुतः पूज्यः पण्डितः परमेश्वरः ।
भवतापप्रशमनो भक्ताभीष्ट प्रदायकः ॥ १२
कविः कवीनामधिपः कृपाळुः क्लेशनाशनः ।
समोऽरूपश्च सेनानिर्भक्त सम्पत्प्रदायकः ॥ १३
व्याघ्रचर्मधरः शूली कपाली वेणुवादनः ।
कम्बुकण्ठः कलरवः किरीटादिविभूषणः ॥ १४
धूर्जटीर्वीरनिलयो वीरो वीरेन्दुवन्दितः ।
विश्वरूपो वृषपतिर्विविधार्थ फलप्रदः ॥ १५
दीर्घनासो महाबाहुश्चतुर्बाहुर्जटाधरः ।
सनकादिमुनिश्रेष्ठ स्तुत्यो हरिहरात्मजः ॥ १६
इति श्री हरिहरपुत्राष्टोत्तरशतनामस्तोत्रं सम्पूर्णं ॥